# पुनः स्मारणम् –

## रूपकस्य दश भेदाः सन्ति । ते च –

1.नाटकम्  2.प्रकरणम् 3.भाणः  4.व्यायोगः

5.समवकारः  6.डिमः 7. ईहामृगः  8.अङ्कः 9.वीथी

10.प्रहसनम् इति ।

# रूपकेषु नायकलक्षणम्

**त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।**
**दक्षो अनुरक्तलोकस्तेजो वैदग्ध्यशीलवान्नेता ।।**

(साहित्यदर्पणः)

Contd.....

# नायकभेदाः

**रूपकेषु नायकभेदाः चतुर्धा सन्ति । ते च –**

**i. धीरोदात्तः ii. धीरोद्धतः iii. धीरललितः iv. धीरप्रशान्तः चेति ।**

Contd…..

## i. धीरोदात्तः

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ।।

यथा - रामयुधिष्ठिरादिः ।

Contd.....

## ii. धीरोद्धतः

मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः ।
आत्मश्लाघानिरतो धीरोद्धतः कथितः ।।

यथा - भीमसेनादिः।

Contd…..

# iii. धीरललितः

निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ।

यथा - रत्नावाल्यादौ वत्सराजादिः ।

Contd.....

# iv. धीरप्रशान्तः

सामान्यगुणैर्भूयान्द्विजादिको धीरप्रशान्तः स्यात् ।

यथा - मालतीमाधवादौ माधवादिः ।

# रूपकेषु नायिकालक्षणम्

नायिका पुनर्नायकसामान्यगुणैः त्यागादिभिर्यथासम्भवैर्युक्ता भवति ।

सा च (i) स्वस्त्री (ii) अन्यस्त्री (iii) साधारणस्त्रीति त्रिविधा ।

Contd…..

## (i) स्वस्त्री

विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।

यथा – उत्तररामचरिते सीता ।

# (ii) अन्यस्त्री (परकीया)

**परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ।**

**यथा मालतीमाधवादौ मालत्यादिः ।**

Contd…..

# (iii) साधारणस्त्री

धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ।।
निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि ।

यथा मृच्छकटिकादौ वसन्तसेनादिः ।

# 1.नाटकम्

नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ।।

- नाटके कथावस्तु प्रख्यातं रामायणमहाभारतादिभ्यः गृहीतं भवति ।
- नाटके पञ्च सन्धयः स्युः । ते च –

  मुखम्, प्रतिमुखम्, गर्भः, अवमर्शः, उपसंहृतिः ।
- एतेषां सन्धीनाम् अनुसरणेन कथा यन्त्रबद्धेव सुदृढा शैथिल्यरहिता भवति ।
- एते एव इतिवृत्ते कुतूहलवर्धनाय हेतुभूताः भवन्ति ।

Contd.....

सुखदुःखसमुद्भूति नानारसनिरन्तरम् ।

पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ।।

Contd…..

प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ।।

दुष्यन्तादिः, श्रीरामः, श्रीकृष्णादिवत् दिव्यः, युधिष्ठिरादिवत् दिव्यादिव्यो वा केषुचित् नायकः भवेत् |

Contd…..

एक एव भवेदङ्गी श्रृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः ।।

**उदाहरणानि–**

- श्रृङ्गाररसप्रधानानि अभिज्ञानशाकुन्तलादीनि ।
- वीररसप्रधानानि वेणीसंहारादीनि च नाटकानि ।

Contd.....

# प्रमुखाः अंशाः

## नाटकविधौ ध्यातव्याः प्रमुखाः अंशाः –

i.पूर्वरङ्गः  ii.नान्दी  iii. सूत्रधारः

iv.प्रस्तावना  v. विष्कम्भः चेति ।

Contd…..

# i.पूर्वरङ्गः

रूपकप्रयोगस्य प्रारम्भे विघ्नोपशान्तये नटाः पूजादिकं कुर्वन्ति । स एव 'पूर्वरङ्गः' इत्युच्यते ।

**यथा -**

**यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।**
**कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ।।**

Contd…..

## ii.नान्दी

पूर्वरङ्गस्य प्रधानमङ्गं नान्दी । श्लोकरूपायां नान्द्यां देवद्विजनृपादीनां स्तुतिः क्रियते ।

**यथा –**

**आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।**
**देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ।।**

Contd…..

## iii. सूत्रधारः

सूत्रं धारयतीति सूत्रधारः । विविधाभिनयेषु प्रवीणः, नायकस्य, कवेः, वस्तुनश्च गुणान् आसूत्रयन् प्रधानः नटः सूत्रधारः ।

यथा –

पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते ।

प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः ।।

Contd.....

# iv.प्रस्तावना

अस्याः एव 'आमुखम्' इति नामान्तरम् । नान्द्यनन्तरं सूत्रधारः भार्यां, नटीम्, अन्यं वा नटम् आहूय सम्भाषणं करोति । तयोः सम्भाषणेन रूपकस्य नाम, तस्य प्रणेतुः कवेः नाम, तत्प्रयोगसमयः इत्यादयः सूच्यन्ते । यथा –

नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ।।
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ।।

Contd.....

# V.विष्कम्भः

एकं, द्वे, ततः अधिकानि वा मध्यपात्राणि प्रवेश्य, तत्सम्भाषणादिना वृत्तस्य वर्तिष्यमाणस्य च कथांशस्य यदा सूचना क्रियते तस्य विष्कम्भः इति नाम । यथा–

अपेक्षितं परित्याज्यं नीरसं वस्तु विस्तरम् ।
यदा सन्दर्शयेच्छेषमामुखानन्तरं तदा ।।
कार्यो विष्कम्भको नाट्ये आमुखाक्षिप्तपात्रकः ।

